कामक्रोधसमुत्थेन भ्रातुः क्रोधाग्निना वृतः । प्रभञ्जन इवाप्रीतः प्रययौ लक्ष्मणस्ततः ॥ १३ ॥
सालतालाश्वकर्णांश्च तरसा पातयन्बलात् । पर्यस्यन्गिरिकूटानि द्रुमानन्यांश्च वेगितः ॥ १४ ॥
शिलाश्च शकलीकुर्वन्पद्भ्यां गज इवाशुगः । दूरमेकपदं त्यक्त्वा ययौ कार्यवशाद्द्रुतम् ॥ १५ ॥
तामपश्यद्बलाकीर्णां हरिराजमहापुरीम् । दुर्गामिक्ष्वाकुशार्दूलः किष्किन्धां गिरिसंकटे ॥ १६ ॥
रोषात्प्रस्फुरमाणोष्ठः सुग्रीवं प्रति लक्ष्मणः । ददर्श वानरान्भीमान्किष्किन्धायां बहिश्चरान् ॥ १७ ॥
तं दृष्ट्वा वानराः सर्वे लक्ष्मणं पुरुषर्षभम् । शैलशृङ्गाणि शतशः प्रवृद्धांश्च महीरुहान् ॥
जगृहुः कुञ्जरप्रख्या वानराः पर्वतान्तरे ॥ १८ ॥
तान्गृहीतप्रहरणान्सर्वान्दृष्ट्वा तु लक्ष्मणः । बभूव द्विगुणं क्रुद्धो बह्विन्धन इवानलः ॥ १९ ॥
तं ते भयपरीताङ्गाः क्षुब्धं दृष्ट्वा प्लवङ्गमाः । कालमृत्युयुगान्ताभं शतशो विद्रुता दिशः ॥ २० ॥
ततः सुग्रीवभवनं प्रविश्य हरिपुङ्गवाः । क्रोधमागमनं चैव लक्ष्मणस्य न्यवेदयन् ॥ २१ ॥
तारया सहितः कामी सक्तः कपिवृषस्तदा । न तेषां कपिसिंहानां शुश्राव वचनं तदा ॥ २२ ॥

---

सुग्रीवं प्रति स्वेन वक्तव्यम् उत्तरं तदुपरि सुग्रीवेण वक्तव्यम् सोत्तरं तदुपरि स्ववक्तव्योत्तरसहितम् मत्वाऽऽलोच्य ॥ १२ ॥

१३] ति० टी०–भ्रातू रामस्य यः कामो मनोरथस्तज्जन्यो यः क्रोधस्तद्विघातजन्यः क्रोधस्तत्समुत्थेन तज्जन्येन क्रोधाग्निना वृतः, अत एवाप्रीतः प्रभञ्जनो वायुरिव वेगेन प्रययौ ॥ १३ ॥

रा० टी०–यथेति । यथोक्तकारी रामोक्तमनतिक्रम्य सकलकार्यकरणशीलः भ्रातुः कामक्रोधसमुत्थेन कामः सीतान्वेषणविषयकोत्कटेच्छा तद्विघातकसुग्रीवानवधानतेत्यर्थः, तस्मात्समुत्थेन जातेन क्रोधाग्निना स्वकोपरूपवह्निना वृतः अत एव अप्रीतः सुग्रीवविषयकप्रीतिरहितः बुद्धया बृहस्पतेः समः रामानुजो लक्ष्मणः सोत्तरं दास्यमानसुग्रीवप्रत्युत्तरसहितमुत्तरं सुग्रीवप्रत्युत्तरानन्तरकालकदास्यमानस्वप्रत्युत्तरं वचनं किंचोत्तरमुत्कृष्टं सोत्तरमुरत्वसहितमुत्तरमित्यर्थः, मत्वा निश्चित्य प्रभञ्जनः वेगेन वायुरिव प्रययौ । श्लोकद्वयमेकान्वयि ॥ १२ ॥ १३ ॥

गो० टी०–यथोक्तेति । यथोक्तं रामोक्तमनतिक्रम्य करोतीति यथोक्तकारी लक्ष्मणः वचनं सुग्रीवं प्रति स्वेन वक्तव्यं वचनं यथोक्तकारीति विशेषणाद्रामोपदिष्टं वचनमिति सिद्धम् । उत्तरं च स्ववचनस्य सुग्रीवेण वक्ष्यमाणमुत्तरं च सोत्तरं स्वेन वक्ष्यमाणोत्तरसहितं मत्वा आलोच्य प्रययाविति संबन्धः। दूरमिति । एकपदं पौरस्त्यपदं दूरं त्यक्त्वा दूरे क्षिप्त्वा । अनेन द्रुतगमनं सूचितं, द्रुतं गच्छन् हि पुरुषः पुरः पादं दूरे क्षिपति ॥ १२–१६ ॥

१४ ] ति० टी०–तरसोरुवेगेन पर्यस्यन्क्षिपन् । वेगितः संजातवेगः ॥ १४ ॥

रा० टी०–गमनप्रकारं वर्णयन्नाह–सालेति । बलात् तरसा वेगेन सालादीन् पातयन् गिरिकूटानि अन्यांश्च द्रुमान् पर्यस्यन् उत्पाट्य इतस्ततः प्रक्षिपन् गज इव पद्भ्यां शिलाः शकलीकुर्वन् खण्डीकुर्वाणः एकपदं दूरं त्यक्त्वा दूरे दूरे पादं धृत्वेत्यर्थः, वेगितः अतिवेगं प्राप्तः अत एव आशुगः लक्ष्मणः कार्यवशात् द्रुतं ययौ । श्लोकद्वयमेकान्वयि ॥ १४ ॥ १५ ॥

१६–१७ ] ति० टी०–बलाकीर्णां वानरसेनाव्याप्ताम् । गिरिसंकटे भूधरमध्ये वर्तमानाम् ॥ १६ ॥ १७ ॥

रा० टी०–तामिति । गिरिसंकटे पर्वतमध्ये विद्यमानां बलाकीर्णां वानरसेनासंयुक्तामत एव दुर्गां परैरगम्यां हरिराजमहापुरीं तां प्रसिद्धां किष्किन्धां इक्ष्वाकुशार्दूलः लक्ष्मणः अपश्यत् ॥ १६ ॥

रा० टी०–रोषादिति । सुग्रीवं प्रति रोषाद्धेतोः प्रस्फुरमाणौ औष्ठौ यस्य स लक्ष्मणः किष्किन्धायाः बहिश्चरान् वानरान् ददर्श ॥ १७ ॥

गो० टी०–तामिति । गिरिसंकटे निबिडगिरिमध्ये अनेन पूर्वोक्तगुहाशब्दो विवृतः ॥ १६ ॥ १७ ॥

१८ ] ति० टी०–क्रुद्धलक्ष्मणदर्शनेन भीत्या शैलशृङ्गादिग्रहो वानराणाम् ॥ १८ ॥

रा० टी०–तमिति । वानराः नरा इव कुञ्जरप्रख्याः सर्वे वानराः तं लक्ष्मणं दृष्ट्वा पर्वतान्तरे पर्वतमध्ये विद्यमानानि शतशः शैलशृङ्गाणि प्रवृद्धान् महीरुहांश्च जगृहुः । वाशब्द इवार्थे सार्धश्लोक एकान्वयी ॥ १८ ॥

गो० टी०–तं दृष्ट्वेत्यादि । वानराः पूर्वोक्ता बहि-



गुहा



शुभैर्ऋषभशृङ्गैश्च कलशैश्चैव काञ्चनैः । शास्त्रदृष्टेन विधिना महर्षिविहितेन च ॥ ३४ ॥
गजो गवाक्षो गवयः शरभो गन्धमादनः । मैन्दश्च द्विविदश्चैव हनूमाञ्जाम्बवांस्तथा ॥ ३५ ॥
अभ्यषिञ्चत सुग्रीवं प्रसन्नेन सुगन्धिना । सलिलेन सहस्राक्षं वसवो वासवं यथा ॥ ३६ ॥
अभिषिक्ते तु सुग्रीवे सर्वे वानरपुंगवाः । प्रचुक्रुशुर्महात्मानो हृष्टाः शतसहस्रशः ॥ ३७ ॥
रामस्य तु वचः कुर्वन्सुग्रीवो वानरेश्वरः । अङ्गदं संपरिष्वज्य यौवराज्येऽभ्यषेचयत् ॥ ३८ ॥
अङ्गदे चाभिषिक्ते तु सानुक्रोशाः प्लवङ्गमाः । साधु साध्विति सुग्रीवं महात्मानो ह्यपूजयन् ॥ ३९ ॥
रामं चैव महात्मानं लक्ष्मणं च पुनः पुनः । प्रीताश्च तुष्टुवुः सर्वे तादृशे तत्र वर्तिनि ॥ ४० ॥
हृष्टपुष्टजनाकीर्णा पताकाध्वजशोभिता । बभूव नगरी रम्या किष्किन्धा गिरिगह्वरे ॥ ४१ ॥
निवेद्य रामाय तदा महात्मने महाभिषेकं कपिवाहिनीपतिः ।
रुमां च भार्यामुपलभ्य वीर्यवानवाप राज्यं त्रिदशाधिपो यथा ॥ ४२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे षड्विंशः सर्गः ॥ २६ ॥

---

३४-३६ ] ति० टी०–महर्षिविहितेन बौधायनादिविहितेन ॥ ३४-३६ ॥

रा० टी०–तत इति । ततः प्राप्तसंतोषानन्तरं मन्त्रविदो जनाः द्विजर्षभाः कुशपरिस्तीर्णं परितः कुशैर्विशिष्टं समिद्धं प्रज्वलितं जातवेदसं वह्निं मन्त्रपूतेन हविषा हुत्वा अवर्तन्त इति शेषः ॥ ३० ॥

रा० टी०–तत इति । रम्ये प्रासादशिखरे प्रासादाकारशृङ्गे विद्यमाने हेमप्रतिष्ठाने हेम्नः प्रतिष्ठानानि पादाः यस्मिन् वरास्तरणसंवृते आसने राजपीठे सुग्रीवं मन्त्रैः विधिवत् प्राङ्मुखं स्थापयित्वा तीर्थेभ्यः पुण्यहेतुभ्यः नद्यादिभ्यः शुभैः ऋषभशृङ्गादिभिराहृत्य संस्थापितानि अपो जलानि कनककुम्भेषु निधाय प्रसन्नेन प्रसादेनोपलक्षिताः वानरर्षभाः गजादयः शास्त्रदृष्टेन शास्त्रोक्तेन विधिना महर्षिविहितेन महर्षीणामाज्ञया च सुग्रीवमभ्यषिञ्चन्त । तत्र दृष्टान्तः सुगन्धिना सलिलेन सहस्राक्षं सहस्रसंख्याकनयनविशिष्टं वासवमिन्द्रं वसवो यथा । श्लोकषट्कमेकान्वयि ॥ ३१-३६ ॥

३७-३९ ] ति० टी०–हृष्टाः प्रचुक्रुशुः किलकिलाशब्दं कृतवन्तः ॥ ३७-३९ ॥

रा० टी०–अभिषिक्त इति । सुग्रीवे अभिषिक्ते सति वानरपुंगवाः हृष्टाः सन्तः प्रचुक्रुशुः प्रभूतं स्वजातीयशब्दं चक्रुः ३७

रा० टी०–रामस्येति । सुग्रीवः रामस्य वचः रामकर्तृकाज्ञां कुर्वन् सन् अङ्गदं संपरिष्वज्य यौवराज्ये अभ्यषेचयत् ॥ ३८ ॥

रा० टी०–अङ्गद इति । अङ्गदे अभिषिक्ते यौवराज्याभिषेकं प्राप्ते सति सानुक्रोशाः दयावन्तः प्लवङ्गमाः साधु साध्विति सुग्रीवमपूजयन् ॥ ३९ ॥

गो० टी०–अङ्गद इति । सानुक्रोशाः अङ्गदे सदयाः ३८

४०-४२ ] ति० टी०–तादृशे तत्रवर्तिनि । अभिषिक्ते सुग्रीवेऽङ्गदे च, तत्र किष्किन्धायां वर्तिनि वर्तमाने सतीत्यर्थः ॥ ४०-४२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये किष्किन्धाकाण्डे षड्विंशः सर्गः ॥ २६ ॥

रा० टी०–राममिति । तादृशे विधिपूर्वके तत्र तस्मिन्नभिषेके वर्तति वर्तमाने सति सर्वे वानराः समं लक्ष्मणं च पुनः पुनस्तुष्टुवुः ॥ ४० ॥

गो० टी०–रामं चैवेति । तादृशे सुग्रीवाङ्गदाभिषेकरूपोत्सवे वर्तति वर्तमाने सति ॥ ३९ ॥

रा० टी०–हृष्टेति । गिरिगह्वरे विद्यमाना किष्किन्धा हृष्टपुष्टजनाकीर्णा अत एव पताकाध्वजशोभिता अत एव रम्या बभूव ॥ ४१ ॥

गो० टी०–हृष्टेति । पताकाध्वजयोर्भेद उक्तः ॥ ४० ॥

रा० टी०–निवेद्येति । कपिवाहिनीपतिः वानरसेनाधीशः सुग्रीवः महाभिषेकं रामाय निवेद्य रुमां भार्यामुपलभ्य प्राप्य त्रिदशाधिप इव राज्यमवाप ॥ ४२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ किष्किन्धाकाण्डे षड्विंशः सर्गः ॥ २६ ॥

गो० टी०–निवेद्येति । निवेद्य रामसमीपमागत्य निवेद्येत्यर्थः ॥ ४१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मुक्ताहाराख्याने किष्किन्धाकाण्डव्याख्याने षड्विंशः सर्गः ॥ २६ ॥





संविधास्यति कार्याणि सर्वाणि ससुहृद्गणः । स्नातोऽयं विविधैर्गन्धैरौषधैश्च यथाविधि ॥ ६ ॥
अर्चयिष्यति माल्यैश्च रत्नैश्च त्वां विशेषतः । इमां गिरिगुहां रम्यामभिगन्तुं त्वमर्हसि ॥ ७ ॥
कुरुष्व स्वामिसंबन्धं वानरान्संप्रहर्षय । एवमुक्तो हनुमता राघवः परवीरहा ॥ ८ ॥
प्रत्युवाच हनूमन्तं बुद्धिमान्वाक्यकोविदः । चतुर्दश समाः सौम्य ग्रामं वा यदि वा पुरम् ॥ ९ ॥
न प्रवेक्ष्यामि हनुमन्पितुर्निर्देशपारगः । सुसमृद्धां गुहां दिव्यां सुग्रीवो वानरर्षभः ॥ १० ॥
पविष्टो विधिवद्वीरः क्षिप्रं राज्येऽभिषिच्यताम् । एवमुक्त्वा हनूमन्तं रामः सुग्रीवमब्रवीत् ॥ ११ ॥
वृत्तज्ञो वृत्तसंपन्नमुदारबलविक्रमम् । इममप्यङ्गदं वीरं यौवराज्येऽभिषेचय ॥ १२ ॥
ज्येष्ठस्य हि सुतो ज्येष्ठः सदृशो विक्रमेण च । अङ्गदोऽयमदीनात्मा यौवराज्यस्य भाजनम् ॥ १३ ॥
पूर्वोऽयं वार्षिको मासः श्रावणः सलिलागमः । प्रवृत्ताः सौम्य चत्वारो मासा वार्षिकसंज्ञिताः ॥ १४ ॥
नायमुद्योगसमयः प्रविश त्वं पुरीं शुभाम् । अस्मिन्वत्स्याम्यहं सौम्य पर्वते सहलक्ष्मणः ॥ १५ ॥

---

अमात्राः मन्त्रिणः परिवार्य उपतस्थिरे सुग्रीवेण सह जग्मुः॥१॥

गो॰ टी॰–अथ सुग्रीवाभिषेकः षड्विंशे–तत इत्यादि । क्लिन्नवाससम् आर्द्रवस्त्रं सद्यःस्नानादिति भावः । शाखामृगमहामात्राः वानररूपा मन्त्रिणः ॥ १ ॥

रा॰ टी॰–अभिगम्येति । अक्लिष्टकारिणं क्लेशाभावेन सकलकर्मप्रवर्तनशीलं रामम् अभिगम्य प्राप्य सर्वे सुग्रीवप्रभृतयः पितामहं ब्रह्माणम् ऋषय इव प्राञ्जलयः प्रणयसूचकबद्धयुगलकराः सन्तः स्थिताः ॥ २ ॥

रा॰ टी॰–तत इति। ततः रामसमीपप्राप्त्यनन्तरं काञ्चनशैलाभः सुमेरुसदृशः तरुणार्कनिभाननः तरुणसूर्यसदृशमुखः हनुमान् अब्रवीत् ॥ ३ ॥

गो॰ टी॰–अभिगम्येति । सर्वे सुग्रीवादयः ॥ २॥३ ॥

रा॰ टी॰–तद्वचनाकारमाह–भवदिति । सुदंष्ट्राणां तीक्ष्णदंष्ट्राविशिष्टानां संपन्नबलशालिनाम् अतिबलवतां महात्मनां वानराणां सुदुष्प्रापं प्राप्तुमशक्यं पितृपैतामहं महदिदं राज्यं भवत्प्रसादात् प्राप्तं सुग्रीवेणेति शेषः। सार्धश्लोक एकान्वयी॥४॥

रा॰ टी॰–भवतेति । भवता समनुज्ञातः ससुहृद्गणः सुग्रीवः नगरं किष्किन्धां प्रविश्य सर्वाणि कार्याणि राज्ञा कर्तव्यानि संविधास्यति ॥ ५ ॥

गो॰ टी॰–भवत्प्रसादादिति । वानराणां राज्यमित्यन्वयः ॥ ४ ॥ ५ ॥

६–७ ] ति॰ टी॰–कार्याणि राजकार्याणि । यथाविधि स्नातो राज्याभिषेकाभिषिक्तः ॥ ६ ॥ ७ ॥

रा॰ टी॰–स्नात इति । गन्धैरौषधैश्च स्नातोऽयं सुग्रीवः माल्यैः रत्नैश्च त्वां विशेषतोऽर्चयिष्यति अतः गिरिगुहां किष्किन्धामितो गन्तुमर्हसि। सार्धश्लोक एकान्वयी ॥ ६ ॥ ७ ॥

गो॰ टी॰–अतिनिपुणतया हनुमान् प्रथमं संग्रहेण विज्ञाप्य तच्छृण्वति रामे पुनर्विशदमाह–स्नात इति ॥ ६ ॥

गो॰ टी॰–इमामिति । गिरिगुहां किष्किन्धाम् । वानराणां स्वामिना संबन्धं कुरु सुग्रीवं वानरराजं कुर्वित्यर्थः ॥ ७—११॥

८–१० ] ति॰ टी॰–स्वामिसंबन्धं वानरस्वामित्वसंबन्धम् । सुग्रीवस्य राज्याभिषेकेणेति शेषः ॥ ८–१० ॥

रा॰ टी॰–कुरुष्वेति । स्वामिसंबन्धं सुग्रीवे वानरनिरूपितस्वामित्वसंसर्गं कुरुष्व सुग्रीवं राज्ये स्थापयेत्यर्थः, अत एव वानरान् संप्रहर्षय । अर्धं पृथक्–एवमिति । हनुमता एवमुक्तो राघवः हनूमन्तं प्रत्युवाच । अर्धद्वयमेकान्वयि ॥ ८ ॥

रा॰ टी॰–तद्वचनाकारमाह–चतुर्दशेति । हे हनुमन् ! पितुः निर्देशपारगः आज्ञानिर्वाहकोऽहं चतुर्दश समाः वर्षाणि ग्रामं पुरं च न प्रवेक्ष्यामि ॥ ९ ॥

रा॰ टी॰–ननु तर्हि सुग्रीवोऽपि इहैव तिष्ठतु इत्यत आह–सुसमृद्धामिति । गुहां किष्किन्धां प्रविष्टः मदाज्ञया संप्राप्तः सुग्रीवः क्षिप्रं राज्ये राज्यासने अभिषिच्यतामभिषेकेण प्राप्यताम् ॥ १० ॥

११–१२ ] ति॰ टी॰–अभिषिच्यताम् । मदाज्ञया त्वयेति शेषः ॥ ११ ॥ १२ ॥

रा॰ टी॰–एवमिति । हनूमन्तमेवमेवमुक्त्वा रामः सुग्रीवमब्रवीत् ॥ ११ ॥

रा॰ टी॰–तद्वचनाकारमाह–वृत्तज्ञ इति । वृत्तज्ञः लोकशास्त्रवृत्तान्ताभिज्ञस्त्वमुदारबलविक्रमम् उदारौ अधिकावित्यर्थः बलविक्रमौ पराक्रमप्रतापौ यस्य तमङ्गदं यौवराज्ये अभिषेचय ॥ १२ ॥

गो॰ टी॰–इममपीत्यादि । भाजनम् योग्यमित्यर्थः॥१२

१३ ] ति॰ टी॰–यतो ज्येष्ठस्य ज्येष्ठः सुतो विक्रमेण ज्येष्ठस्य सदृशश्च, तस्माद्यौवराज्ये योग्यः ॥ १३ ॥

रा॰ टी॰–तत्र हेतुमाह–जेष्ठस्येति । जेष्ठस्य भ्रातुः ज्येष्ठः सुतः अत एव विक्रमेण सदृशः अत एव अदीनात्मा अयमङ्गदः यौवराज्यस्य भाजनं पात्रम् ॥ १३ ॥

१४–१५ ] ति॰ टी॰–सीतान्वेषणोद्योगं सुग्रीवस्या

---

१ जन इति गो. पाठः । २ इत इति गो. रा. पाठः । ३ हर्षयान्नदि गो. पाठः । ४ पालक इति गो. पाठः । ५ रम्यामिति गो. पाठः । ६ वारेति गो. पाठः । ७ स इति गो. पाठः । ८ ते इति गो. पाठः । ९ संज्ञिका इति गो. पाठः ।

[illegible] हत्वा रावणं राक्षसाधिपम् । माल्यवान्नाम वैदेहि गिरीणामुत्तमो गिरिः ॥ ७९ ॥
ततो गच्छति गोकर्णं पर्वतं केसरी हरिः । स च देवर्षिभिर्दिष्टः पिता मम महाकपिः ॥
तीर्थे नदीपतेः पुण्ये शम्बसादनमुद्धरन् ॥ ८० ॥
तस्याहं हरिणः क्षेत्रे जातो वातेन मैथिलि । हनूमानिति विख्यातो लोके स्वेनैव कर्मणा ॥ ८१ ॥
विश्वासार्थं तु वैदेहि भर्तुरुक्ता मया गुणाः । अचिरात्त्वामितो देवि राघवो नयिता ध्रुवम् ॥ ८२ ॥
एवं विश्वासिता सीता हेतुभिः शोककर्शिता । उपपन्नैरभिज्ञानैर्दूतं तमधिगच्छति ॥ ८३ ॥
अतुलं च गता हर्षं प्रहर्षेण तु जानकी । नेत्राभ्यां वक्रपक्ष्माभ्यां मुमोचानन्दजं जलम् ॥ ८४ ॥
चारु तद्वदनं तस्यास्ताम्रशुक्लायतेक्षणम् । अशोभत विशालाक्ष्या राहुमुक्त इवोडुराट् ॥ ८५ ॥
हनूमन्तं कपिं व्यक्तं मन्यते नान्यथेति सा । अथोवाच हनूमांस्तामुत्तरं प्रियदर्शनाम् ॥ ८६ ॥
एतत्ते सर्वमाख्यातं समाश्वसिहि मैथिलि । किं करोमि कथं वा ते रोचते प्रतियाम्यहम् ॥ ८७ ॥

---

७९ ] ति० टी०–तिर्यग्देहस्य तव कथं पवनात्मजत्वमिति शङ्कामपनयन्नाह—माल्यवान्नामेति ॥ ७९ ॥

रा० टी०–ननु वानरस्य तव वातात्मजत्वं कथमित्यत आह–माल्यवानिति । केसरी हरिर्वानरः माल्यवान्नाम यो गिरिः ततस्तस्माद्गिरेः गोकर्णं पर्वतं गच्छति अगच्छत् ॥ ७९ ॥

गो० टी०–युद्धस्य पवनात्मजमिति पवनात्मजत्वमुक्तं तत्कथं वानरस्येत्यपेक्षायामाह—माल्यवानिति । गच्छति अगच्छत् ॥ ८० ॥

८० ] ति० टी०–गोकर्णं तदाख्यम् । दिष्टः शम्बसादनाख्यासुरवधायाज्ञप्तः । तदुद्धरन् उद्धृतवान् अवधीदित्यर्थः । भूतेऽपि लटः प्रयोगः ॥ ८० ॥

रा० टी०–स इति । देवर्षिभिर्दिष्टः आज्ञप्तः यस्य हरिणो अनेकवानराधिपतेः क्षेत्रे वातेनाहं जातः स महाकपिर्मम पिता नदीपतेः समुद्रस्य तीर्थे जले शम्बसादनं तदभिधासुरमुद्धरन् अनाशयत् भूतेऽपि लटः प्रयोग इति भट्टाः । हरि इत्यत्र सीतादित्वाद्धिः । सार्धश्लोक एकान्वयी ॥ ८० ॥

गो० टी०–स चेति । सः गोकर्णं गतः । देवर्षिभिः तपस्विभिः दिष्टः नियुक्तः । शम्बसादनं तीर्थोपद्रवकारिणमसुरं शम्बसादननामकम् उद्धरन् उदहरत् देवर्षिप्रार्थनया अवधीदित्यर्थः ॥ ८१ ॥

८१ ] ति० टी०–स्वेनैवोत्पत्तिकालप्रवृत्तेन कर्मणा

रा० टी०–अचिरादिति । अचिरात् शीघ्रं राघवस्त्वामितो नयिता नेता ॥ ८२ ॥

गो० टी०–विश्वासार्थमिति । नयिता नेता ॥ ८२ ॥

८३–८५ ] ति० टी०–उपपन्नैर्युक्तैः । अभिज्ञानै रामलक्ष्मणचिह्नैः । अधिगच्छत्प्रत्यगच्छत् ॥ ८३–८५ ॥

रा० टी०–एवमिति । उपपन्नैः युक्तैर्बोधकैर्हेतुभिरित्यर्थः अभिज्ञानैर्बोधकैर्हेतुभिर्विश्वासिता सत्यं कथयतीति विश्वासं प्रापिता सीता तं हनूमन्तं दूतमधिगच्छति अध्यगच्छत् अजानात् ॥ ८३ ॥

रा० टी०–अतुलमिति । अतुलं हर्षं गता प्राप्ता जानकी हर्षेण आनन्दजं जलं मुमोच ॥ ८४ ॥

रा० टी०–चार्विति । राहुमुक्तः उडुराट् चन्द्र इव तस्याः वदनमशोभत ॥ ८५ ॥

गो० टी०–एवमिति । अधिगच्छति अजानात् ॥ ८४–८८ ॥

८६ ] ति० टी०–अन्यथा नेति मायाकपिर्नेत्यर्थः ॥ ८६ ॥

रा० टी०–हनूमन्तमिति । सा सीता हनूमन्तम् अन्यथा रावणस्वादिना न मन्यते अमन्यत अथानन्तरं प्रियदर्शनां तां सीताम् उत्तरं श्रेयस्करं वचनमुवाच ॥ ८६ ॥

८७ ] ति० टी०–सर्वमुत्तरं सर्वं प्रत्युत्तरमाख्यातमित्य- [illegible] किं करोमीति ।

शापकन्तमिमं दृष्ट्वा प्राणो गन्धवहो मुदा । चचार सर्वभूतेषु संनिरुद्धं यथापुरा ॥ ५ ॥
मरुद्रोधाद्विनिर्मुक्तास्ताः प्रजा मुदिताभवन् । शीतवातविनिर्मुक्ताः पद्मिन्य इव साम्बुजाः ॥ ६ ॥
ततस्त्रियुग्मस्त्रिककुत्त्रिधामा त्रिदशार्चितः । उवाच देवता ब्रह्मा मारुतप्रियकाम्यया ॥ ७ ॥
भो महेन्द्राग्निवरुणा महेश्वरधनेश्वराः । जानतामपि वः सर्वं वक्ष्यामि श्रूयतां हितम् ॥ ८ ॥
अनेन शिशुना कार्यं कर्तव्यं वो भविष्यति । तद्दध्वं वरान्सर्वे मारुतस्यास्य तुष्टये ॥ ९ ॥
ततः सहस्रनयनः प्रीतियुक्तः शुभाननः । कुशेशयमयीं मालामुत्क्षिप्येदं वचोऽब्रवीत् ॥ १० ॥
मत्करोत्सृष्टवज्रेण हनुरस्य यथा हतः । नाम्ना वै कपिशार्दूलो भविता हनुमानिति ॥ ११ ॥
अहमस्य प्रदास्यामि परमं वरमद्भुतम् । इतः प्रभृति वज्रस्य ममावध्यो भविष्यति ॥ १२ ॥
मार्तण्डस्त्वब्रवीत्तत्र भगवांस्तिमिरापहः । तेजसोऽस्य मदीयस्य ददामि शतिकां कलाम् ॥ १३ ॥



...र्गः ३६ ]

यदा च शास्त्राण्यध्येतुं शक्तिरस्य भविष्यति । तदास्य शास्त्रं दास्यामि येन वाग्मी भविष्यति ॥ १४ ॥
[ न चास्य भविता कश्चित्सदृशः शास्त्रदर्शने । ]
वरुणश्च वरं प्रादान्नास्य मृत्युर्भविष्यति । वर्षायुतशतेनापि मत्पाशादुदकादपि ॥ १५ ॥
यमो दण्डादवध्यत्वमरोगत्वं च दत्तवान् । वरं ददामि संतुष्ट अविषादं च संयुगे ॥ १६ ॥
गदेयं मामिका नैनं संयुगेषु वधिष्यति । इत्येवं धनदः प्राह तदा ह्येकाक्षिपिङ्गलः ॥ १७ ॥
मत्तो मदायुधानां च अवध्योऽयं भविष्यति । इत्येवं शंकरेणापि दत्तोऽस्य परमो वरः ॥ १८ ॥
[ शिल्पिनां प्रवरः प्रादाद्वरमस्य महामतिः ॥ ]
विश्वकर्मा च दृष्ट्वेमं बालं प्रति महारथः । मत्कृतानि च शस्त्राणि यानि दिव्यानि तानि च । तैरवध्यत्वमापन्नश्चिरजीवी भविष्यति ॥ १९ ॥
दीर्घायुश्च महात्मा च ब्रह्मा तं प्राब्रवीद्वचः । सर्वेषां ब्रह्मदण्डानामवध्योऽयं भविष्यति ॥ २० ॥
ततः सुराणां तु वरैर्दृष्ट्वा ह्येनमलंकृतम् । चतुर्मुखस्तुष्टमना वायुमाह जगद्गुरुः ॥ २१ ॥
अमित्राणां भयकरो मित्राणामभयंकरः । अजेयो भविता पुत्रस्तव मारुत मारुतिः ॥ २२ ॥
कामरूपः कामचारी कामगः प्लवतां वरः । भवत्यव्याहतगतिः कीर्तिमांश्च भविष्यति ॥ २३ ॥
रावणोत्सादनार्थानि रामप्रीतिकराणि च । रोमहर्षकराण्येव कर्ता कर्माणि संयुगे ॥ २४ ॥



सर्गः १०९ ] उत्तरकाण्डम् ७ ३०७३

मत्कथाः प्रचरिष्यन्ति यावल्लोके हरीश्वर । तावद्रमस्व सुप्रीतो मद्वाक्यमनुपालयन् ॥ ३० ॥
एवमुक्तस्तु हनुमान्राघवेण महात्मना । वाक्यं विज्ञापयामास परं हर्षमवाप च ॥ ३१ ॥
यावत्तव कथा लोके विचरिष्यति पावनी । तावत्स्थास्यामि मेदिन्यां तवाज्ञामनुपालयन् ॥ ३२ ॥
जाम्बवन्तं तथोक्त्वा तु वृद्धं ब्रह्मसुतं तदा । मैन्दं च द्विविदं चैव पञ्च जाम्बवता सह ॥
यावत्कलिश्च संप्राप्तस्तावज्जीवत सर्वदा ॥ ॥ ३३ ॥
तैदेवमुक्त्वा काकुत्स्थः सर्वांस्तान्नृक्षवानरान् । उवाच वाढं गच्छध्वं मया सार्धं यथोदितम् ॥३४॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डेऽष्टोत्तरशततमः सर्गः ॥ १०८ ॥

## नवाधिकशततमः सर्गः ।

दक्षिणसव्यपार्श्वयोः श्रीमहीभ्यामुपाश्रितो व्यवसायं पुरस्कृत्य नानाविधायुधैर्गृहीतपुरुषविग्रहैर्ब्राह्मणादिभिर्वेदैरनुगतो रामः प्रातिष्ठत तमन्तःपुरस्त्रियो बालदासीसहिताः सप्रकृतयोऽमात्यवर्गा भरतशत्रुघ्नौ द्रष्टुमागतो जानपदोऽपि तिर्यग्योनयः किं बहुना स्थावरचरभूतानि सुसूक्ष्माण्यपि सानन्दमनुजग्मुर्दाशरथिम् ।

प्रभातायां तु शर्वर्यां पृथुवक्षा महायशाः । रामः कमलपत्राक्षः पुरोधसमथाब्रवीत् ॥ १ ॥
अग्निहोत्रं व्रजत्वग्रे दीप्यमानं सह द्विजैः । वाजपेयातपत्रं च शोभमानं महापथे ॥ २ ॥



२८९६ श्रीमद्वाल्मीकिरामायणे [ आदितः सर्ग ...

यावद्रामकथा वीर चरिष्यति महीतले । तावच्छरीरे वत्स्यन्तु प्राणा मम न संशयः ॥ १७ ॥
यच्चैतच्चरितं दिव्यं कथा ते रघुनन्दन । तन्मयाप्सरसो राम श्रावयेयुर्नरर्षभ ॥ १८ ॥
तच्छ्रुत्वाहं ततो वीर तव चर्यामृतं प्रभो । उत्कण्ठां तां हरिष्यामि मेघलेखामिवानिलः ॥ १९ ॥
एवं ब्रुवाणं रामस्तु हनूमन्तं वरासनात् । उत्थाय सस्वजे स्नेहाद्वाक्यमेतदुवाच ह ॥ २० ॥
एवमेतत्कपिश्रेष्ठ भविता नात्र संशयः । चरिष्यति कथा यावदेषा लोके च मामिका ॥ २१ ॥
तावत्ते भविता कीर्तिः शरीरेऽप्यसवस्तथा । लोका हि यावत्स्थास्यन्ति तावत्स्थास्यन्ति मे कथाः ॥ २२
एकैकस्योपकारस्य प्राणान्दास्यामि ते कपे । शेषस्येहोपकाराणां भवाम ऋणिनो वयम् ॥ २३ ॥
मदङ्गे जीर्णतां यातु यत्त्वयोपकृतं कपे । नरः प्रत्युपकाराणामापत्स्वायाति पात्रताम् ॥ २४
ततोऽस्य हारं चन्द्राभं मुच्य कण्ठात्स राघवः । वैदूर्यतरलं कण्ठे बबन्ध च हनूमतः ॥ २५

प्रेयस्येव सदा स्मृतिहेतुः । भक्तिर्ना परलोकगतित्वेनोपा-

२२ ] ति० टी०—एवं च हनूमते भगवता...





...तिरभसेनागाद्राहुरुत्सृज्य वासवम् । अनेन च स वै दृष्टः प्रधावञ्शैलकूटवत् ॥ ३९ ॥
...र्यं समुत्सृज्य राहुं फलमवेक्ष्य च । उत्पपात पुनर्व्योम ग्रहीतुं सिंहिकासुतम् ॥ ४० ॥
...र्कबिम्बं राम प्रधावन्तं प्लवंगमम् । अवेक्ष्यैवं परावृत्तो मुखशेषः पराङ्मुखः ॥ ४१ ॥
...शंसमानस्तु त्रातारं सिंहिकासुतः । इन्द्र इन्द्रेति संत्रासान्मुहुर्मुहुरभाषत ॥ ४२ ॥
...विक्रोशमानस्य प्रागेवालक्षितं स्वरम् । श्रुत्वेन्द्रोवाच मा भैषीरहमेनं निषूदये ॥ ४३ ॥
...रावतं ततो दृष्ट्वा महत्तदिदमित्यपि । फलं तं हस्तिराजानमभिदुद्राव मारुतिः ॥ ४४ ॥
...स्य धावतो रूपमैरावतजिघृक्षया । मुहूर्तमभवद्घोरमिन्द्राग्न्युपरि भास्वरम् ॥ ४५ ॥
...धावमानं तु नातिक्रुद्धः शचीपतिः । हस्तान्तादतिमुक्तेन कुलिशेनाभ्यताडयत् ॥ ४६ ॥
...तो गिरौ पपातैष इन्द्रवज्राभिताडितः । पतमानस्य चैतस्य वामो हनुरभज्यत ॥ ४७ ॥
...स्मिंस्तु पतिते चापि वज्रताडनविह्वले । चुक्रोधेन्द्राय पवनः प्रजानामहिताय सः ॥ ४८ ॥
...चारं स तु संगृह्य प्रजास्वन्तर्गतः प्रभुः । गुहां प्रविष्टः स्वसुतं शिशुमादाय मारुतः ॥ ४९ ॥
...विण्मूत्राशयमावृत्य प्रजानां परमार्तिकृत् । रुरोध सर्वभूतानि यथा वर्षाणि वासवः ॥ ५० ॥
...वायुप्रकोपाद्भूतानि निरुच्छ्वासानि सर्वतः । संधिभिर्भिद्यमानैश्च काष्ठभूतानि जज्ञिरे ॥ ५१ ॥

---

...इव अट्टहासः तद्वन्तं करीन्द्रमिन्द्र आरुह्य राहुं पुर... कृत्वा सूर्यो यत्र हनुमता सहाभवत् तत्र प्रायात् श्लोक... एकान्वयि ॥ ३७ ॥ ३८ ॥

३९-४०] ति० टी०–अतिरभसेनातिवेगेनागात् । वास... ति पूर्वमिति शेषः । अनेन हनुमता । स राहुः ॥३९–४०॥

रा० टी०–अथेति । राहुः वासवमुत्सृज्य अतिरभसे... इन्द्रप्राप्तेः पूर्वमेव हनुमत्समीपं प्रापेत्यर्थः अनेन हनु... शैलकूटवत्प्रधावन् स राहुः दृष्टः ॥ ३९ ॥

रा० टी०–तत इति । राहुं फलमवेक्ष्य सूर्यं समुत्सृज्य च ... ग्रहीतुं व्योम पुनरुत्पपात हनुमानिति शेषः॥४०॥

गो० टी०–तत इति । महाशैलकूटवत् बृहत्तरफलमवेक्ष्ये... ॥ ४० ॥

४१-४२] ति० टी०–एवमवेक्ष्य महाशैलकूटवद्बृहत्तर... । मुखशेष इति राहोः स्वरूपकथनम् ॥ ४१–४२ ॥

रा० टी०–उत्सृज्येति । मुखमेव शेषः राहुरित्यर्थः एवं ...न्तं प्लवंगममवेक्ष्य परावृत्तो बभूवेति शेषः पराङ्मुखः ... त्रातारमिन्द्रमाशंसमानं त्राणार्थं कथयमानस्सन् इन्द्रेति मुहुर्मुहुरभाषत श्लोकद्वयमेकान्वयि ॥४१॥४२॥

गो० टी०–उत्सृज्येति । मुखशेष इति राहुस्वरूपकथ... ॥ ४१–४६ ॥

४३] ति० टी०–प्रागेवालक्षितं स्वरं राहुदर्शनात्पूर्वमे... राहोः स्वर इति निश्चितम् ॥ ४३ ॥

रा० टी०–राहोरिति । प्राक् राहुदर्शनात्पूर्वमेव आल... विज्ञातं विक्रोशमानस्य राहोः स्वरं श्रुत्वैव अहमेनं निषू... अतस्त्वं माभैषीः इतीन्द्र उवाच ॥ ४३ ॥

४४-४५ ] ति० टी०–इदमपि महत्फलमिति मत्वा । ...राजानमैरावतम् ॥ ४४–४५ ॥

रा०टी०–ऐरावतमिति । मारुतिः ऐरावतं दृष्ट्वा इदमपि महत्फलं तत्तस्माद्धेतोर्हस्तिराजानं हस्तिराजमभिदुद्राव ॥४४॥

रा० टी०–तथेति । ऐरावतजिघृक्षया धावतोऽस्य हनुमतो रूपमिन्द्राग्न्युपरि भास्वरं प्रकाशमानं सत् मुहूर्तं घोरमभवत्॥४५॥

४६ ] ति० टी०–हस्तान्ताद्धस्ताग्रात् ॥ ४६ ॥

रा० टी०–एवमिति । नातिक्रुद्धः हनुमद्बाल्येन हेतुना अतिक्रोधरहितश्शचीपतिः हस्तान्तात् हस्ताग्रभागात् अतिमु... क्तेन कुलिशेन एवमाधावमानं हनुमन्तमभ्यताडयत् ॥ ४६ ॥

गो० टी०–एवमिति । हस्तान्तात् हस्ताग्रात् । हस्तान्त इति समीप इत्यर्थः ॥ ४६–४८ ॥

४७-४८] ति० टी०–वामा हनुः । हनुशब्दः स्त्रियाम् । 'तत्परा हनुः' इति कोशात् ॥ ४७–४८ ॥

रा० टी०–तत इति । इन्द्रवज्राभिताडितः एष हनुमान् गिरौ पपात पतमानस्य तस्य वामा हनुरभज्यत ॥ ४७ ॥

रा० टी०–तस्मिन्निति । तस्मिन्हनुमति वज्रताडनविह्वले अत एव पतिते सति प्रजानां स्वपुत्रस्य अहिताय इन्द्राय पवनश्चुक्रोध आदराद्बहुवचनं किञ्च प्रजानामहिताय हनुमत्प्रहारद्वारा प्रजानामहितकर्त्रे इत्यर्थः ॥ ४८ ॥

४९ ] ति० टी०–प्रचारं देहिमात्रहितभूतं स्वप्रचारं संगृह्य संक्षिप्य । अन्तर्गतः सर्वदेहान्तरगतः । प्रभुः सर्वजगत्प्रवृत्तिनिवृत्तिकर्ता ॥ ४९ ॥

रा० टी०–प्रचारमिति । प्रजास्वंतर्गतः प्रभुः प्रवृत्तिनिवृत्त्योः समर्थो मारुतः ...रं स्वव्यापिं संगृह्य निवर्त्य शिशुमल्पवयस्कं स्वसुतमादाय गुहां प्रविष्टोऽभवदिति शेषः॥४९॥

गो० टी०–प्रचारमिति । प्रचारं स्वीयं देहिप्राणहेतुभूतम् । गृह्य संक्षिप्य । अन्तर्गतः सर्वदेहान्तर्गतः ॥ ४९ ॥

५०-५१] ति० टी०–रुरोध निरुद्धस्वगतिप्रचारमकरोत्

---

१ शाकूलेति गो. पा. । २ फलं मत्वा हस्तिराजमिति गो. पा. । ३ इन्द्राग्न्योरिवेति गो. पा. । ४ वाम इति गो.पा. । ५ वाके इति गो.पा. ।





एकसालमात्रभेदनेऽस्य वालिसाम्यशङ्का जायेत तन्निवृत्त्यर्थमनुक्तानामपि सा ( रसात ) लगिरिप्रस्थादीनां भेदनमिति मन्तव्यम् ॥ ६६ ॥

**ततः प्रीतमनास्तेन विश्वस्तः स महाकपिः ।**
**किष्किन्धां रामसहितो जगाम च गुहां तदा ॥ ६७ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] ततः तेन विश्वस्तः प्रीतमनाः स महाकपिः रामसहितः तदा किष्किन्धां गुहां जगाम ।

[ विग्रहः ] प्रीतं मनो यस्यासौ-प्रीतमनाः । महांश्चासौ कपिश्च-महाकपिः । रामेण सहितो—रामसहितः ।

[ अर्थः ] ततः=तदनन्तरं, तेन=तालभेदनादिना, विश्वस्तः=जातविश्वासः, प्रीतमनाः = प्रसन्नचेताः, स महाकपिः=सुग्रीवो वानरश्रेष्ठः, रामसहितः = रामेण सह, तदा = तस्मिन्नवसरे, किष्किन्धां गुहां, = किष्किन्धाख्यां गुहाम्, जगाम = अगच्छत् ।

[ वाच्यप० ] सुग्रीवेण किष्किन्धा जग्मे ।

[ भाषा ] तब सुग्रीव रामजी के साथ किष्किन्धा को चला ॥ ६७ ॥

टीका : श्री वाल्मीकि रामायण अन्वय, विग्रह,अर्थ, सहित
सम्बद्ध प्रामाणिक व्याख्यान्



दिखाते हुए सात तालवृक्षोंको और पर्वत तथा रसातलको बींध डाला ॥ ६६ ॥

ततः प्रीतमनास्तेन विश्वस्तः स महाकपिः ।
किष्किन्धां रामसहितो जगाम च गुहां तदा ॥ ६७ ॥

तदनन्तर रामके इस कार्यसे महाकपि सुग्रीव मन-ही-मन प्रसन्न हुए और उन्हें रामपर विश्वास हो गया । फिर वे उनके साथ किष्किन्धा गुहामें गये ॥ ६७ ॥

ततोऽगर्जद्धरिवरः सुग्रीवो हेमपिङ्गलः ।
तेन नादेन महता निर्जगाम हरीश्वरः ॥ ६८ ॥
अनुमान्य तदा तारां सुग्रीवेण समागतः ।
निजघान च तत्रैनं शरेणैकेन राघवः ॥ ६९ ॥

---

गिरिं रसातलं चैव जनयन्प्रत्ययं तदा ।
ततः प्रीतमनास्तेन विश्वस्तः स महाकपिः ॥ ६६ ॥

पहाड़ फोड़, रसातल को चला गया । तब तो सुग्रीव का सन्देह दूर हो गया । तदनन्तर सुग्रीव प्रसन्न हो और विश्वास कर ॥ ६६ ॥

किष्किन्धां रामसहितो जगाम च गुहां[2] तदा ।
ततोऽगर्जद्धरिवरः सुग्रीवो हेमपिङ्गलः ॥ ६७ ॥

श्रीरामजी को साथ ले गुफा की तरह पर्वतों के बीच बसी हुई किष्किन्धा पुरी को गये । वहाँ पहुँच पीले नेत्र वाले सुग्रीव ने ज़ोर से गर्जना की ॥ ६७ ॥

तेन नादेन महता निर्जगाम हरीश्वरः ।
अनुमान्य[3] तदा तारां सुग्रीवेण समागतः ॥ ६८ ॥

१ उच्छ्रितेन—उद्धृत्य चिक्षेप (गो०) २ गुहां—गुहावत्पर्वतमध्यवर्तिनींपुरीं (गो०) ३ अनुमान्य—परिसान्त्व्य ; सन्तोष्य (गो०)

"गुफा की तरह पर्वतों के बीच बसी हुई किष्किन्धा पुरी को गये"

 

एवमुक्ता ततस्तुष्टा जननी ते महाकपे ।
गुहायां त्वां महाबाहो प्रजज्ञे प्लवगर्षभम् । 4.66.20॥ -
- व्याख्या : "गुहायां इति – तत्पर्वत गुहायाम्" पृ.स. १६८६, )

गुहायां पद को "तत्पर्वतगुहायां" इत्युक्ते "किष्किन्धायां जिसका अर्थ हैं "किष्किंधा नाम से विख्यात गुहा "गुहावत् पर्वतमध्यवर्तिनी पुरी" , हुआ ( किष्किंधा ६६ सर्ग, श्लोक स.२० ) उसी किष्किंधा पुरी / नगर मे विराजमान विख्यात पर्वत में माता अञ्जना देवी के गर्भ से श्री हनुमान जी का जन्म हुआ, तब से यह पर्वत "अञ्जनाद्रि" नाम से विख्यात हुआ ।

## महाभारत में "गुहा = किष्किंधा" शब्द का प्रयोग
## महाभारत - सभा पर्व – अध्याय 2-32

तं जित्वा स महाबाहुः प्रययौ दक्षिणापथम्।

***गुहामासादयामास किष्किन्धां** लोकविश्रुताम्॥ 2-32-18(12623)

`पुरा वानरराजेन वालिना चाभिरक्षिताम्।

ततः कोसलराजस्य रामस्यैवानुगेन च।

सुग्रीवेणाभिगुप्तां तां प्रविष्टस्तमथाह्वयत्'॥ 2-32-19(12624)

तत्र वानरराजाभ्यां मैन्देन द्विविदेन च



M- 3038

॥ अथ श्रीमहाभारते सभापर्व प्रारभ्यते ॥



महाभारत में "गुहा = किष्किंधा" शब्द का प्रयोग
महाभारत - सभा पर्व – अध्याय 2-32

॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ इतिसभापर्वणिनैलकंठीयेभारतभावदीपेत्रिंशोऽध्यायः ॥ ३० ॥ ॥४॥ ॥४॥ तथैवेति ॥ १ ॥ २ ॥ ३ ॥ पटच्चरान्चोरदेशान् ॥ ४ ॥ ५ ॥

सुह्मानामधिपंचैवयेचसागरवासिनः॥सर्वान्म्लेच्छगणांश्चैवविजिग्येभरतर्षभः॥२५॥ एवंबहुविधान्देशान्विजित्यपवनात्मजः॥ वसुतेभ्यउपादायलौहि
त्यमगमद्बली॥ २६॥ ससर्वान्म्लेच्छनृपतीन्सागरानूपवासिनः॥करमाहारयामासरत्नानिविविधानिच॥ २७॥ चंदनागुरुवस्त्राणिमणिमौक्तिककंबलं॥
कांचनंरजतंचैवविद्रुमंचमहाधनं॥ २८॥ तेकोटीशतसंख्येनकौंतेयंमहतातदा॥ अभ्यवर्षन्महात्मानंधनवर्षेणपांडवं ॥ २९ ॥ इंद्रप्रस्थमुपागम्यभीमोभीम
पराक्रमः॥ निवेदयामासतदाधर्मराजायतद्धनं॥ ३०॥ इतिश्रीमहाभारतेसभापर्वणिदिग्विजयपर्वणिभीमप्राचीदिग्विजयेत्रिंशोऽध्यायः॥ ३०॥ ॥४॥
वैशंपायनउवाच तथैवसहदेवोपिधर्मराजेनपूजितः॥ महत्यासेनयाराजन्प्रययौदक्षिणांदिशं ॥ १ ॥ सशूरसेनान्कात्स्न्येनपूर्वमेवाजयत्प्रभुः ॥ मत्स्य
राजंचकौरव्योवशेचक्रेबलाद्बली॥ २॥अधिराजाधिपंचैवदंतवक्रंमहाबलं॥जिगायकरदंचैवकृत्वाराज्येन्यवेशयत्॥३॥सुकुमारंवशेचक्रेसुमित्रंचनराधिपं॥
तथैवापरमत्स्यांश्चव्यजयत्सपटच्चरान् ॥ ४ ॥ निषादभूमिंगोशृंगंपर्वतप्रवरंतथा ॥ तरसैवाजयद्धीमान्श्रेणिमंतंचपार्थिवं ॥ ५ ॥ नरराष्ट्रंचनिर्जित्यकुंतिभो
जमुपाद्रवत्॥ प्रीतिपूर्वंचतस्यासौप्रतिजग्राहशासनं॥ ६॥ ततश्चर्मण्वतीकूलेजंभकस्यात्मजंनृपं ॥ ददर्शवासुदेवेनशेषितंपूर्ववैरिणा ॥ ७॥ चक्रेतेनससंग्रा
मंसहदेवेनभारत॥ सतमाजौविनिर्जित्यदक्षिणाभिमुखोययौ॥ ८ ॥ सेकानपरसेकांश्चव्यजयत्सुमहाबलः ॥ करंतेभ्यउपादायरत्नानिविविधानिच॥ ९ ॥
ततस्तेनैवसहितोनर्मदामभितोययौ॥ विंदानुविंदावावंत्यौसैन्येनमहतावृतौ ॥ जिगायसमरेवीरावाश्विनेयःप्रतापवान् ॥ १०॥ ततोरत्नान्युपादायपुरंभो
जकटंययौ॥ तत्रयुद्धमभूद्राजन्दिवसद्वयमच्युत॥ ११॥ सविजित्यदुराधर्षंभीष्मकंमाद्रिनंदनः॥कोसलाधिपतिंचैवतथावेणातटाधिपं॥ १२॥ कांतारकां
श्चसमरेतथाप्राक्कोटकान्नृपान् ॥ नाटकेयांश्चसमरेतथाहेरंबकान्युधि ॥ १३॥ मारुधंचविनिर्जित्यरम्यग्राममथोबलात् ॥ नाचीनानर्बुकांश्चैवराजानश्चम
हाबलः॥ १४॥ तांस्तानाटविकान्सर्वानजयत्पांडुनंदनः ॥ वाताधिपंचनृपतिंवशेचक्रेमहाबलः ॥ १५ ॥ पुलिंदांश्चरणेजित्वाययौदक्षिणतःपुरः ॥ युयुधेपां
ड्यराजेनदिवसंनकुलानुजः॥ १६॥ तंजित्वासमहाबाहुःप्रययौदक्षिणापथं॥ गुहामासादयामासकिष्किंधांलोकविश्रुतां॥ १७॥

॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥



***गुहामासादयामास किष्किन्धां** लोकविश्रुताम्॥ 2-32-18(12623)

 

और श्रीमद् वाल्मीकि रामयण में न केवल श्री हनुमान् जी के जन्म स्थल पर्वत, गुफा के बारें में अपितु किष्किन्धा में विराजमान अन्य विशेष पर्वत और अन्य गुफाओं के बारें में भी संपूर्ण उल्लेख , विवरण स्पष्ट रूप से मिलता है । ,

**उदा : १)** ऋष्यमूक पर्वत, माल्यवन्त, इत्यादि पर्वतों में विराजमान् दिव्य गुफा, यह गुहा का सामान्य अर्थ है ।

**2 )** स्थान विशेष जैसे किष्किन्धा, यहां सन्दर्भानुसार पद का अर्थ स्वीकार करना है, जैसे उदा : - हरि - विष्णु, हरि – वानर, पदका

**6. प्र ) वाल्मीकि रामायण में गुहा शब्द का किष्किन्धा अर्थ मे प्रयोग किस सन्दर्भ मे कहा कहा प्रयोग कियागया है ?**

**स)** हां श्री वाल्मीकि महर्षि जी ने अपनी रामायण मे अनेक जगहों मे किष्किन्धा के स्थान मे गुहा पद का प्रयोग किये हैं जहाँ जहाँ गुहा पद प्रयोग किये हैं वह नीचे दियागया है और **सामान्य गुहा के बारे में भी दिया है ।**

**"गुहा = सामान्य गुहा पद प्रयोग सन्दर्भ "**

राम तस्य तु शैलस्य महती शोभते **गुहा**।
शिलापिधाना काकुत्स्थ दुःखं चास्याः वेशनम् । 3.73.39 ॥,
तस्या **गुहायाः** प्राग्द्वारे महान्शीतोदको ह्रदः।
फलमूलान्वितो रम्यो नानामृगसमावृतः। 3.73.40॥

तस्यां वसति सुग्रीवश्चतुर्भिस्सह वानरैः। -इस गुफा के अंदर सुग्रीव अपने ४ मुख्य अनुचरों के साथ रहते थे यह निवास स्थान् है, ( यह ऋष्यमुक पर्वत



के अंदर विराजमान गुहा, जहाँ वाली से त्रस्त होकर जिस ऋष्यमुक पर्वत पर सुग्रीव ने आश्रय लिया वह गुहा )







तुंग भद्रा नदी कि किनारे ऋष्यमुक पर्वत **के** अंदर विराजमान सुग्रीव गुहा,

तदागच्छ गमिष्यामि पम्पां तां प्रियदर्शनाम् । 3.75.6 ॥
ऋष्यमूको गिरिर्यत्र नातिदूरे प्रकाशते।
यस्मिन्वसति धर्मात्मा सुग्रीवोंऽशुमतस्सुतः। 3.75.7॥

https://www.youtube.com/watch?v=q6yynEnrteM



नित्यं वालिभयात्त्रस्तश्चतुर्भिस्सह वानरैः।
कदाचिच्छिखरे तस्य पर्वतस्यावतिष्ठते। 3.73.41॥
आओ, हम पम्पा चलें, जो देखने में मनभावन है। सुग्रीव, धर्मात्मा, सूर्य का पुत्र, बालि के भय से यहाँ से अधिक दूर चमकते ऋष्यमुक में ठहरे हुए हैं।
**आत्मना पञ्चमं** मां हि दृष्ट्वा शैलतटे स्थितम्।
उत्तरीयं तया त्यक्तं शुभान्याभरणानि च । 4.6.11॥,

यहां श्री राम जी ने भी सीता जी के अन्वेषण में किष्किंधा में अनेक पर्वत और पर्वत गुफाओं का निरीक्षण किया,
निरीक्षमाणस्सहसा महात्मा सर्वं वनं निर्झरकन्दराश्च।
उद्विग्नचेतास्सह लक्ष्मणेन विचार्य दुःखोपहतः प्रतस्थे । 4.1.126॥

एवमुक्तस्तु सुग्रीवश्शैलस्य **गहनां गुहाम्** ।
**प्रविवेश** ततः शीघ्रं राघवप्रियकाम्यया । 4.6.14 ॥,









रावण जब सीता माता जी का अपहरण करके आकाश मार्ग से लंका ले जारहा था, उस समय सीता माता जी ने किष्किन्धा नगर में ऋष्यमूक पर्वत पर वानरों को देख कर पुष्पक विमान से अपने आभूषण नीचे गिराए, तब सुग्रीव ने उन आभूषणों को एक "गुफा" में संरक्षण किया और जब श्री राम जी से मित्रता हुई उस समय वही गुफा से उन आभूषणों को लाकर श्री राम जी को समर्पण किया



 

सुग्रीव **के द्वारा** माता सीता जी **के** आभूषणों को संरक्षण किया गया "गुफा" उत्तरीयं गृहीत्वा तु शुभान्याभरणानि च।
इदं पश्येति रामाय दर्शयामास वानरः । 4.6.15॥,

ऋष्यमूकात्स धर्मात्मा किष्किन्धां लक्ष्मणाग्रजः।
जगाम सह सुग्रीवो वालि विक्रम पालिताम् । 4.13.1॥

**कन्दराणि** च शैलांश्च निर्दराणि **गुहास्तथा**।
शिखराणि च मुख्यानि दरीश्च प्रियदर्शनाः । 4.13.6॥

इमां **गिरिगुहां** रम्यामभिगन्तुमितोऽर्हसि । 4.26.7॥
( यहा गिरिगुहां इति – किष्किंधां इत्यर्थः गो.व्या )

चतुर्दश समास्सौम्य ग्रामं वा यदि वा पुरम् ।
न प्रवेक्ष्यामि हनुमन्पितुर्निर्देशपालकः । 4.26.9।।

सुसमृद्धां **गुहां रम्यां** सुग्रीवो वानरर्षभः।
प्रविष्टो विधिवद्वीरः क्षिप्रं राज्येऽभिषिच्यताम् । 4.26.9।।

श्री राम जी ने श्री हनुमान जी को सुग्रीव के राज्याभिषेक के लिए सम्बोधित करते हुए कहां ! मै नियम के अनुसार किसी ग्राम, पुर मे प्रवेश नहीं कर सकता हूं, आप लोग समृद्ध शालिनी दिव्य "गुफा = किष्किन्धा" में प्रवेश करें" ऐसा बोला,



**इस श्लोक का अर्थ क्या है ?**

स ) यह श्लोक अत्यन्त महत्वपुर्ण है
**क्यू कि ?**
स) क्यू कि ?
1. जब सुग्रीव श्रीराम जी से मिलने के बाद अपनी नगरी किष्किन्धा में प्रवेश करते हैं उस समय यह भी वाल्मीकि जी किष्किन्धा के स्थान में "गुहा" शब्द प्रयोग करते हैं और
2. जब लक्ष्मण जी वर्ष ऋतु समाप्त होने के बाद श्री राम जी की आज्ञा से तुंग भद्रा के दक्षिण तट पर विराजमान माल्यवन्त पर्वत से सुग्रीव से मिलने केलिए किष्किन्धा नगर में प्रवेश करते हैं उस सन्दर्भ में भी श्री वाल्मीकि जी ने 'गुहा' शब्द का प्रयोग करते हैं ।

यहाँ **"सुसमृद्धां गुहां रम्यां", "** प्रविष्टो" इस का अर्थ
**गुहा का अर्थ किष्किंन्धां**" इत्यर्थः - **"गुहां किष्किंन्धां प्रविष्टः "**
**गो.व्या** ) समृद्द शालिनी दिव्य गुफा में प्रवेश किया" यह अर्थ स्पष्ट है

**इयं गिरिगुहा रम्या** विशाला युक्तमारुता।
प्रभूतसलिला सौम्य प्रभूतकमलोत्पला । 4.26.15 ॥
इति रामाभ्यनुज्ञातस्सुग्रीवो वानराधिपः।




**प्रविवेश पुरीं रम्यां किष्किन्धां** वालिपालिताम्। 4.26.18॥
यह **गिरिगुहा रम्या, प्रविवेश पुरीं रम्यां इत्युक्ते किष्किन्धां इत्यर्थः**
हृष्टपुष्टजनाकीर्णा पताकाध्वजशोभिता।
बभूव नगरी रम्या "**किष्किन्धा गिरिगह्वरे"** । 4.26.41॥
( किष्किन्धा "गिरिगह्वरे" इत्युक्ते **पर्वतों के बीच मे विद्यमान** गुफा के समान नगरी "किष्किन्धायां इत्यर्थः" गो.व्या )
अभिषिक्ते तु सुग्रीवे प्रविष्टे वानरे **गुहाम्**।
आजगाम सह भ्रात्रा रामः प्रस्रवणं गिरिम् 4.27.1॥
"प्रविष्टे वानरे गुहां -  इत्युक्ते **गुहां - किष्किन्धाख्याम्** " ( गो. टी. व्या )





माल्यवंत पर्वत ( प्रस्रवण गिरि ) - इस पर्वत में विराजमान गुफा ( जहां श्री राम जी ने लक्ष्मण जी के साथ चातुर्मास्य व्रत किया उसी समय माल्यवंत पर्वत में इसी गुहा में श्री राम जी ने ४ माह चातुर्मास्य व्रत केलिये निवास किया ),

तस्य शैलस्य शिखरे **महतीमायतां गुहाम्** ।
प्रत्यगृह्णत वासार्थं रामस्सौमित्रिणा सह 4.27.4॥

**इयं गिरिगुहा रम्या** विशाला युक्तमारुता।
अस्यां वत्स्याम सौमित्रे वर्षरात्रमरिन्दम4.27.6॥
(अत्र "महतीमायतां गुहाम्" , "गिरिगुहा"  इत्युक्ते माल्यवंत पर्वत में विराजमान गुहा  )







https://www.youtube.com/watch?v=T8jW7n_Sq24&t=5s



प्रागुदक्प्रवणे देशे **गुहा** साधु भविष्यति।
पश्चाच्चैवोन्नता सौम्य निवातेयं भविष्यति4.27.12॥

**गुहां** प्रविष्टे सुग्रीवे विमुक्ते गगने घनैः।
वर्षरात्रोषितो रामः कामशोकाभिपीडितः 4.30.1॥

**तत्वदीपिका** - अथ उक्तानुवादपूर्वकं रामस्य वृत्तान्तमाह गुहामिति । सुग्रीवेविमुक्त इत्यत्र अविमुक्त इति छेदः । सुग्रीवे गुहां किष्किन्धां प्रविष्टे गगने घनैरविमुक्ते आवृते सति वर्षरात्रोषितो रामः पाण्डरं गगनं दृष्ट्वा मुमोहेत्युत्तरत्र सम्बन्धः ।। 4.30.13 ।। ( अत्र गुहां इत्युक्ते किष्किंधायां इत्यर्थः ),

त्वं प्रविश्य च किष्किन्धां ब्रूहि वानरपुङ्गवम् ।
मूर्खं ग्राम्यसुखे सक्तं सुग्रीवं वचनान्मम ।। 4.30.70 ।।
तामपश्यद्बलाकीर्णां हरिराजमहापुरीम्।
**दुर्गा** मिक्ष्वाकुशार्दूलः किष्किन्धां गिरिसङ्कटे । 4.31.16 ॥,
अथ प्रतिसमादिष्टो लक्ष्मणः परवीरहा।
प्रविवेश **गुहां** घोरां ( रम्यां ) **किष्किन्धां** रामशासनात् । 4.33.1॥

हनुमत्प्रार्थनानन्तरकालिकं लक्ष्मणवृत्तान्तमाह अथेति । अथ सुग्रीवकर्मकहनुमत्प्रार्थनानन्तरं प्रतिसमादिष्टः गुहाप्रवेशाय अङ्गदेन प्रार्थितः रामशासनादागतो लक्ष्मणः किष्किन्धां प्रविवेश ।। 4.33.1 ।।

( प्रविवेश गुहां घोरां किष्किन्धां इत्युक्ते "किष्किन्धायां" इत्यर्थः )

स तां रत्नमयीं श्रीमान्दिव्यां पुष्पितकाननाम्।
**रम्यां रत्नसमाकीर्णां ददर्श महतीं गुहाम्**। 4.33.4॥
( महतीं गुहाम् इति – दिव्यां महतीं गुहाम् )

**अञ्जनाम्बुदसङ्काशाः** कुञ्जरप्रतिमौजसः( कुञ्जरेन्द्रमहौजसः ।



**अञ्जने पर्वते** चैव ये वसन्ति प्लवङ्गमाः। 4.37.5॥
( किष्किन्धा नगरी स्थित अञ्जनाद्रि पर्वत मे निवास करने वाले वानर )

**अञ्जन -** यहाँ "काजल वर्ण" भी अर्थ है, "हाथी के जैसे वर्ण वाले बृहत पाषाण रूप पर्वत" दोनो अलग अलग रूप से प्रयोग किया है,

ततस्ते**ऽञ्जनसङ्काशा** गिरेस्तस्मान्महाजवाः।
तिस्रः कोट्यः प्लवङ्गानां निर्ययुर्यत्र राघवः। 4.37.20॥

( तस्मात् गिरेः अञ्जनगिरेः निर्ययुः - ति, गो.टी व्या, ),

किष्किन्धा नगरी में स्थित किष्किन्धा पर्वत ही अञ्जनाद्रि पर्वत है। इस पर्वत से माल्यवन्त पर्वत बहुत दूर मे है। किष्किन्धा नगरी पम्पा पट्टण के बाहर माल्यवन्त पर्वत है, किष्किन्धा नगरी / किष्किन्धा /अञ्जनाद्रि पर्वत तुङ्गभद्रा नदी के उत्तर दिशा में हैं और माल्यवन्त पर्वत / प्रस्रवण गिरि ( जहा श्रीराम चातुर्मास्य केलिए जिस पर्वत मे रहते थे ) वह नगर से दूर तुङ्गभद्रा के दक्षिण दिशा में हैं ,

**MAP**



"तिस्रः कोट्यः प्लवङ्गानां निर्ययुर्यत्र राघवः। 4.37.20॥
अञ्जनाद्रि पर्वत में रहने वाले तीन करोड़ वानर श्री राम जी जिस माल्यवन्त पर्वत में विराजमान थे उसी प्रस्रवण गिरि केलिए सभी वानर गए।

अञ्जनाद्रि पर्वत के बारें में वाल्मीकि रामायण में अत्यन्त स्पष्ट उल्लेख है यह पर्वत किष्किंधा में ही स्थित है, और यहाँ इस वाक्य को लेकर विपरीत अर्थ निकालकर दुरुपयोग करने वाले बहुत लोग यह बोलते हैं कि यह अञ्जनाद्रि पर्वत हमारे क्षेत्र मैं है, और यहाँ से किष्किंधा वानर गए , ऐसे



दावा करने वाले लोगों में तिरुपति / नासिक / झारखंड के गुमला नामक स्थान है, यहाँ इन जगहों का वाल्मीकि रामायण में या अन्य कही भी लेश मात्र भी उल्लेख नही है। यदि अन्यत्र किष्किन्धा क्षेत्र है तो, वहा उस क्षेत्र का नाम जरूर श्रीमद् वाल्मीकि रामायण में उसी क्षेत्र का नाम उल्लेख करते । परन्तु ऐसे किसी अन्य क्षेत्र का लेश मात्र भी प्रस्तावन नहीं है । किष्किंधा के अलावा अन्य किसी जगह का कोई प्रामाणिक, प्रमाण नही है.।

ततः पर्वतमासाद्य ऋष्यमूकं नृपात्मज। 4.46.23॥
न विवेश तदा वाली मतङ्गस्य भयात्तदा।
एवं मया तदा राजन्प्रत्यक्षमुपलक्षितम्। 4.46.24॥

पृथिवीमण्डलं कृत्स्नं **गुहा**मस्यागतस्ततः।

श्री सुग्रीव जी श्री हनुमान इत्यादि अपने ४ मित्रों कि सात् ऋष्य मूक पर्वत मे रहते थे : ऋष्यमूके गिरिवरे पम्पापर्यन्तशोभिते ।
निवसत्यात्मवान्वीरश्चतुर्भिस्सह वानरैः। 3.72.12॥



**4.** एे ऋष्यमूकपर्वत कै से आया ?

स ) इस ऋष्य मूक पर्वत को ब्रह्मा जी ने निर्माण किया था:
ऋष्यमूकश्च पम्पायाः पुरस्तात्पुष्पितद्रुमः। सुदुःखारोहणो नाम
शिशुनागाभिरक्षितः। 3.73.31॥ उदारो ब्रह्मणा चैव पूर्वकाले विनिर्मितः।



# श्री हनुमान जी कि जन्म, जन्म स्थल, और जन्म वृत्तान्त निरूपण

श्री हनुमान् जी का जन्म त्रेतायुग में दक्षिण भारत में ( वर्तमान कर्नाटक राज्य) पम्पाक्षेत्र तुङ्गभद्रा नदी के तट पर विराजमान किष्किंधा नगरी में हुआ, यहाँ "गुहा" का अर्थ साक्षात् स्थान विशेष है "किष्किंधा" ( यथा रामायणे।१।१।७०। "किष्किन्ध्यांरामसुग्रीवौजग्मतुस्तौगुहांतदा॥")

अब तक गुहा **का** अर्थ किष्किन्धा यह निरूपण हुआ,









https://www.youtube.com/watch?v=zLpUnt1dHKE&t=37s



# भगवान श्री  हनुमान जी  की  जन्मतिथि

**प्रश्न: भगवान हनुमान की जन्म तिथि कब है?, यह किस ग्रंथ में वर्णित है?**

**उत्तर:** श्रीमद वाल्मीकि महर्षि द्वारा लिखित "आनंद रामायण" में  है,

**प्रश्न: क्या आप प्रणामश्लोक कह सकते हैं,**

**उत्तर:**आनंद रामायण के सारकंडा में 13वें सर्ग का 163 वां श्लोक है,

**प्रश्न: यह जन्म तिथि विषय प्रसंग कौन किसको किस संदर्भ में बता रहा है?**

**उत्तर:** जिस समय श्री राम ने श्री अगस्त्य से श्री हनुमान के जन्म की कथा सुनाने की प्रार्थना की तब महर्षी श्री अगस्त्य जी ने श्री राम को श्री हनुमान की जन्म तिथि और पूरी कहानी बताई।

**प्रश्न: इस का प्रमाण श्लोक क्या है?**

**उत्तर:** श्लो"महा चैत्री महाचैत्रीपूर्णिमायां समुत्पन्नो अंजनी सुत:"

- आ.रा  स.13.163, "चैत्र शुक्ल पूर्णिमा" चैत्रमास पूर्णिमा तिथि को हनुमान जी का जन्म अंजनिसुत के रूप में हुआ था।



# श्लोक, ग्रंथ, प्रमाण, श्री मद वाल्मीकि महर्षि द्वारा विरचित "आनंद रामायण"




## श्लोकः " महाचैत्रीपूर्णिमायां समुत्पन्नोऽञ्जनीसुतः" ||
## सा.का -13.163,

आ. रा. स्तासांत्रीणांदशाननः ॥ आश्चर्यमतुलंलब्ध्वाचिंतयामासदुर्मतिः १३६ विष्णुनायेहतायुद्धेतेषामेतादृशंबलम् ॥ तर्ह्यत्रनिहतस्तेनश्वेतद्वीपंव्रजाम्यहम् सा. कां.
१३७ मयिविष्णुर्यथाकुप्येत्तथाकार्यंकरोम्यहम् ॥ इतिनिश्चित्यवैदेहींजहाररावणोवनात् १३८ जानन्नेवंमहालक्ष्मींसजहाराञ्वनीसुताम् ॥ मातृवत्पाल १
॥ ३७ ॥ यामासत्वत्तःकांक्षन्वधंनिजम् १३९ ॥ श्रीरामचंद्रउवाच ॥ वालिसुग्रीवयोर्जन्मश्रोतुमिच्छामित्वन्मुखात् ॥ रवींद्रौवानराकारौजज्ञातइतितच्छ्रुतम् १४०
॥ अगस्त्यउवाच ॥ मेरौस्वर्णमयेपूर्वंसभायांब्रह्मणःकदा ॥ नेत्राभ्यांपतितंदिव्यमानंदाश्रुजलंतदा ४१ तद्गृहीत्वाकरेब्रह्माध्यात्वाकिंचित्तदत्यजत् ॥ भूमौपतितमा
त्रेणतस्माज्जातोमहाकपिः ४२ तमाहद्रुहिणोवत्सत्वमत्रवससर्वदा ॥ एवंबहुतिथेकालेगतेऋक्षविरजाःसुधीः ४३ कदाचित्पर्यटन्मेरौफलमूलार्थमुद्यतः ॥ अपश्यद्दिव्य
सलिलांवापींमणिशिलाचिताम् ४४ पानीयंपातुमगमत्तत्रच्छायामयंकपिम् ॥ दृष्ट्वाप्रतिकपिंमत्वानिपपातजलांतरे ४५ तत्राऽदृष्ट्वाहरिंशीघ्रंबहिरुत्प्लुत्यसंययौ ॥ अ
पश्यत्सुंदरींनारीमात्मानंविस्मयंगतः ४६ ततोददर्शमघवासोऽत्यजद्वीर्यमुत्तमम् ॥ तामप्राप्यैवतद्वीर्यंवालदेशेऽपतद्भुवि ४७ वालीसमभवत्तत्रशक्रतुल्यपराक्रमः ॥
भानुरप्यागमत्तत्रतदानीमेवभामिनीम् ४८ दृष्ट्वाकामवशोभूत्वाग्रीवादेशेऽसृजन्महत् ॥ बीजंतस्यास्ततःसद्योसुग्रीवोबलवानभूत् ४९ पुत्रद्वयंसमादायगत्वासानिद्रि
ताक्वचित् ॥ प्रभातेपश्यदात्मानंपूर्ववद्वानराकृतिम् १५० तद्वृत्तंतुविधिःश्रुत्वाकिष्किंधाराज्यमुत्तमम् ॥ ददौसवानरेंद्रायपुत्राभ्यांतत्रसंस्थितः ५१ मृतेऋक्षेविरजस्या
सूद्वालीपुर्यांकपीश्वरः ॥ एवंतेकथितंरामयथापृष्टंत्वयामम ५२ ॥ श्रीरामचंद्रउवाच ॥ यदाऽसौवालिनाबंधुःकिष्किंधायाबहिष्कृतः ॥ तदातस्यैवसचिवःश्रीमान्पव
ननंदनः ५३ नवेदकिंबलंनैजंवालितुल्यपराक्रमः ॥ इतिरामवचःश्रुत्वापुनस्तंमुनिरब्रवीत् ५४ केसरीनामविख्यातःकपिरंजनपर्वते ॥ तस्यास्तांचशुभेपत्न्यौवान
र्यौविकृदागिरौ ५५ प्लवंगस्यांजनीनाम्नीस्थितातावच्चखात्तदा ॥ पपातपायसमयःपिंडोगृध्रीमुखाद्भुवि ५६ यदानीतस्तुकैकेय्याकराद्गृध्र्याशुभःपुरा ॥ तंपिंडंभक्षया
मासवानरीह्यमृतोपमम् ५७ एतस्मिन्नंतरेतत्रमार्जारास्यासमागता ॥ पतिनासहितेतेद्वेक्रीडंत्यौवसनंतयोः ५८ अहरत्पवनोवेगाद्दृष्ट्वावायुस्तदूरवः ॥ अंजनीप्रा
र्थयामासतयाभोगंचकारसः ५९ तथैवप्रार्थयामासमार्जारास्यांसनिर्ऋतिः ॥ तयाऽकरोद्रतिंतत्रसोऽपिपर्वतमूर्द्धनि १६० तयोस्ताभ्यांसमुत्पन्नौवानर्यांमारुतात्म
जः ॥ मार्जार्यांःसमभूद्घोरःपिशाचोघर्घरस्वनः ६१ चैत्रेमासिसितेपक्षेहरिदिन्यांमघाभिधे ॥ नक्षत्रेससमुत्पन्नोहनुमानरिपुसूदनः ६२ महाचैत्रीपूर्णिमायांसमुत्पन्नो
ऽञ्जनीसुतः ॥ वदंतिकल्पभेदेनबुधाइत्यापिकेचन ६३ बालभावेऽपियःपूर्वंदृष्ट्वोद्यंतंविभावसुम् ॥ मत्वापक्वफलंचेतिजिघृक्षुर्लीलयोत्प्लुतः ६४ योजनानांपंचशतंवायु ॥ ३७ ॥
वेगेनमारुतिः ॥ राहुस्तस्मिन्दिनेदर्शेययौसूर्यंरघूत्तम ६५ तावद्दृष्ट्वाघटुकामंरवेरग्रेकपिंस्थितम् ॥ तदाराहुर्भयादेवरविंमुक्त्वेंद्रमाययौ ६६ राहुःप्राहशचीनाथंतव
पिडांकरोम्यहम् ॥ दत्तःपूर्वंत्वयासूर्यःपीडांकर्तुंसुरेश्वर ६७ तत्रविघ्नंसमुत्पन्नंतत्त्वंशीघ्रंनिवारय ॥ तद्राहुवचनादिंद्रःसमारुह्यगजोपरि ६८ देवैर्युतोययौवेगाददर्श

१ वायुस्तदूरतःइतिपाठः । २ एकादश्यामित्यर्थः ।

श्रीहरिः

# श्रीमदानन्दरामायणस्थविषयानुक्रमणिका

## सारकाण्ड

### प्रथम सर्ग





 



## द्वादश सर्ग



## त्रयोदश सर्ग





मृतेऽर्क्षविरजस्याभूद्वाली पुर्यां कपीश्वरः। एवं ते कथितं राम यथा पृष्टं त्वया मम ॥१५२॥

श्रीरामचन्द्र उवाच

यदाऽसौ वालिना बंधुः किष्किन्धाया बहिष्कृतः।
तदा तस्यैव सचिवः श्रीमान्पवननंदनः ॥१५३॥
न वेद किं बलं नैजं वालितुल्यपराक्रमः। इति रामवचः श्रुत्वा पुनस्तं मुनिरब्रवीत् ॥१५४॥

अगस्तिरुवाच

केसरीनाम विख्यातः कपिरंजनपर्वते।
तस्यास्तां च शुभे पत्न्यौ वानर्यविकदा गिरौ ॥१५५॥
प्लवंगस्याञ्जनीनाम्नी स्थिता तावच्च खात्तदा।
पपात पायसमयः पिंडो गृध्रीमुखाद्भुवि ॥१५६॥
यदा नीतस्तु कैकेय्या कराद्गृध्र्या शुभः पुरा। तं पिंडं भक्षयामास वानरी ह्यमृतोपमम् ॥१५७॥
एतस्मिन्नंतरे तत्र मार्जारास्या समागता। पतिना रहिते ते द्वे क्रीडंत्यौ वसनं तयोः ॥१५८॥
अहरत्पवनो वेगाद्दृष्ट्वा वायुस्तदूरवः।
अंजनीं प्रार्थयामास तया भोगं चकार सः ॥१५९॥
तथैव प्रार्थयामास मार्जारास्यां स निर्ऋतिः। तयाऽकरोद्रतिं तत्र सोऽपि पर्वतमूर्द्धनि ॥१६०॥
तयोस्ताभ्यां समुत्पन्नो वानर्यां मारुतात्मजः।
मार्जार्याः समभूद्घोरः पिशाचो घर्घरस्वनः ॥१६१॥
चैत्रे मासि सिते पक्षे हरिदिन्यां मघाऽभिधे। नक्षत्रे स समुत्पन्नो हनुमान् रिपुसूदनः ॥१६२॥
महाचैत्रीपूर्णिमायां समुत्पन्नोऽञ्जनीसुतः। वदन्ति कल्पभेदेन बुधा इत्यादि केचन ॥१६३॥
बालभावेऽपि यः पूर्वं दृष्ट्वोद्यंतं विभावसुम्।
मत्वा पक्वफलं चेति जिघृक्षुर्लीलयोत्प्लुतः ॥१६४॥

---

यह वृत्तान्त सुनकर ब्रह्माजीने वानरेन्द्र ऋक्षविरजाको किष्किधा नगरीका उत्तम राज्य दे दिया। जहाँपर वह अपने दोनों पुत्रोंके साथ रहने लगा॥ १५१ ॥ उस ऋक्षराजके मर जानेपर किष्किन्धापुरीका राजा कपीश्वर बाली हुआ। हे राम! जो आपने पूछा, मैंने वह सब कह दिया॥ १५२ ॥ श्रीरामचन्द्र बोले—जब सुग्रीवको बालीने किष्किन्धासे बाहर निकाल दिया था, उस समय इनके मन्त्री ये वायुनन्दन हनुमान् भी साथ थे॥ १५३ ॥ पर इनको बालीके समान अपना बल क्यों नहीं याद आया? रामके इस वचनको सुनकर मुनि अगस्त्य फिर कहने लगे–॥ १५४ ॥ अंजन पर्वतनिवासी केसरी नामसे विख्यात कपिकी दो वानरी स्त्रियें थीं॥ १५५ ॥ किसी समय उस कपिकी अंजनी नामकी स्त्री वहाँ बैठी थी। इतनेमें आकाशसे किसी गृध्रीके मुखसे छूटकर पायसका एक पिण्ड आ गिरा॥ १५६ ॥ यह पिंड वही था जो कि पहले कैकेयी-के हाथसे एक गृध्री छीन ले गयी थी। उस अमृततुल्य पिण्डको वानरीने खा लिया॥ १५७ ॥ इतनेमें वहाँ वह दूसरी मार्जारास्या वानरी भी आ पहुंची। पतिकी अनुपस्थितिमें वे दोनों क्रीड़ा कर रही थीं। तभी उन दोनोंके वस्त्रोंको पवनने उड़ाकर ऊँचे उठाया तथा उनकी जाँघोंको देख लिया। पश्चात् अंजनीसे प्रार्थना करके उसके साथ वायुने भोग किया॥ १५८ ॥ १५९ ॥ उसी प्रकार निर्ऋतिने मार्जारास्यासे प्रार्थना करके पर्वतके शिखरपर उसके साथ रति की॥ १६० ॥ उन दोनोंसे उन दोनोंमें–वानरीसे मारुतात्मज हनुमान् तथा मार्जारीसे घोर घर्घरस्वन पिशाच उत्पन्न हुआ॥ १६१ ॥ चैत्र शुक्ल एकादशीके दिन मघानक्षत्रमें रिपुदमन हनुमान्-का जन्म हुआ था॥ १६२ ॥ कुछ पण्डित कल्पभेदसे चैत्रकी पूर्णिमाके दिन हनुमान्का शुभ जन्म हुआ, ऐसा कहते हैं॥ १६३ ॥ वे हनुमान् बाल्यकालमें ही सूर्यको देख तथा उन्हें पका फल समझकर उसको लेनेकी





क्षेमराज श्रीकृष्णदासेन सम्पादितस्य मुम्बई श्री वेङ्कटेश्वरस्टीम मुद्रणालयेन प्रकाशितस्य पुनर्मुद्रणम्

श्रीमद्वाल्मीकीयरामायणम्

THE VALMIKIYARAMAYANA

[श्री-गोविन्दराजीय-रामानुजीय-तनिश्लोकी-महेश्वरतीर्थीयाख्यव्याख्या चतुष्टयालङ्कृतं]
मुनिभावप्रकाशिका-सत्यतीर्थीयादिव्याख्योद्धृत टिप्पणी संवलितम् च]

प्रथम खण्ड :: बालकाण्डम्

Ph.-0542-2420414
CHAUKHAMBHA SANSKRIT BHAWAN
POST BOX No. 1160
OPP. CHITRA CINEMA, CHOWK
VARANASI - 221001

NAG PUBLISHERS

NAG PUBLISHERS
11A/U. A. Jawahar Nagar, Delhi-7 (India)



॥ श्रीः ॥
चौखम्बा सुरभारती ग्रन्थमाला
२६
२०७

वाल्मीकिरामायणान्तर्गतं

मूलरामायणम्

संस्कृत-हिन्दीव्याख्योपेतम्

नवीन पाठ्यक्रमानुसार लघु एवं अतिलघु
प्रश्नोत्तर सहित

व्याख्याकार:
डॉ. श्रीकृष्णमणि त्रिपाठी
भू.पू. प्राध्यापक एवं अध्यक्ष
पुराणेतिहास, संस्कृति, भूगोल विभाग
श्रीसम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी

चौखम्बा सुरभारती प्रकाशन
वाराणसी



# 10. श्री हनुमान जी का जन्म स्थल और जन्म वृत्तान्त निरूपण

जहाँ माता अञ्जना देवी ने हनुमान जी को जन्म दिया वही “किष्किन्धा” पर्वत बाद में अञ्जनाद्री नाम से विख्यात हुआ, किष्किन्धा पर्वत ही अञ्जनाद्रि पर्वत है ।

ततः प्रतीतं प्लवतां वरिष्ठमेकान्तमाश्रित्य सुखोपविष्टम् ।
सञ्चोदयामास हरिप्रवीरो हरिप्रवीरं हनुमन्तमेव ।। 4.65.34 ।।
अनेकशतसाहस्रीं विषण्णां हरिवाहिनीम् ।
जाम्बवान् समुदीक्ष्यैवं हनुमन्तमथाब्रवीत् ।। 4.66.1 ।।

अप्सराप्सरसां श्रेष्ठा विख्याता पुञ्जिकस्थला ।
अञ्जनेति परिख्याता पत्नी केसरिणो हरेः ।। 4.66.8 ।।
विख्याता त्रिषु लोकेषु रूपेणाप्रतिमा भुवि ।
अभिशापादभूत्तात वानरी कामरूपिणी ।। 4.66.9 ।।
दुहिता वानरेन्द्रस्य कुञ्जरस्य महात्मनः ।
कपित्वे चारुसर्वाङ्गी कदाचित् कामरूपिणी ।। 4.66.10 ।।
मानुषं विग्रहं कृत्वा रूपयौवनशालिनी ।
विचित्रमाल्याभरणा महार्हक्षौमवासिनी ।
अचरत् *पर्वतस्याग्रे प्रावृडम्बुदसन्निभे ।। 4.66.11 ।।



**पर्वतगुहाओं कि बीच मे विद्यमान किष्किन्धा पम्पा सरोवर**

https://www.youtube.com/watch?v=iHOsCOYef1o



श्री राम लक्ष्मण पम्पा क्षेत्र मे माता शबरी को दर्शन  देना



**पर्वतगुहाओं कि बीच मे विद्यमान किष्किन्धा पर्वतगुहाओं कि बीच मे विद्यमान किष्किन्धा पम्पा सरोवर**

**https://www.youtube.com/watch?v=_1hgFOq_H4g&t=90s**

## पम्पा सरोवर -  दूर मे स्थित किष्किन्धा अञ्जनाद्रि पर्वत

अप्सरेति निर्देश आर्षः ।। 4.66.811 ।।
तस्या वस्त्रं विशालाक्ष्याः पीतं रक्तदशं शुभम् ।
स्थितायाः *पर्वतस्याग्रे मारुतो ऽपहरच्छनैः ।। 4.66.12 ।

## 11.  श्री हनुमान जन्मभूमि  किष्किन्धा अञ्जनाद्रि पर्वत पर विराजमान ३ मन्दिर :

**1. श्री  बाल हनुमान्  जी का मन्दिर**
**2. माता अंजनी देवी का मन्दिरउ**
**3. श्री राम दरबार मन्दिर, श्री अयोध्या रामपादुका,**



किष्किन्धा अञ्जनाद्रि पर्वत – पर्वत का अग्र भाग जहाँ वायु के अनुग्रह से अञ्जना देवी ने श्री हनुमान् जी  को ( पति केसरी देशान्तर गमन समय मे) जन्म दिया, ठीक उसी मूल स्थान मे श्री हनुमद् जन्मभूमि मंदिर है



पर्वत शिखर अग्र भाग में विराजमान ऐतिहासिक श्री हनुमान जन्मभूमि मन्दिर
गर्भगृह मूल स्वरूप बाल स्वरूप कि ऊपर सूर्य किरण
यही से सूर्य को दर्शन् किया और् फल समझकर अंतरिक्ष
अभ्युत्थितं ततः सूर्यं बालो दृष्ट्वा महावने ।
फलं चेति जिघृक्षुस्त्वमुत्प्लुत्याभ्यपतो दिवम् ॥ १९ ॥ 4 - 65 66 - 19



पर्वत शिखर अग्र भाग में विराजमान ऐतिहासिक श्री हनुमान जन्मभूमि मन्दिर



**श्री किष्किन्धा अञ्जनाद्रि पर्वत प्रवेश द्वार पहाड़ी पर चढ़ने के लिए  575 सीढ़ियां हैं**

**https://www.youtube.com/watch?v=n2Wu39AU0Fg**



**किष्किन्धा पर्वत के  ऊपर जहा वायु देवता माता अञ्जना देवी को औरस  पुत्र  की रूप मे श्री हनमान् जी को अनुग्रह किया ठीक उसी स्थान पर वराजमान प्राचीन  माता अञ्जना की गोद में विराजमान माता अञ्जना श्री बाल हनुमान जी का मंदिर**



किष्किन्धा अञ्जनाद्रि पर्वत के ऊपर विराजमान श्री हनुमान जन्मभूमि में छोटा मन्दिर अत्यन्त पुरातन हैं । अञ्जनाद्रि पर्वत अत्यन्त विशाल रूप में है और पर्वत के लिये २ द्वार है एक उत्तर (पुराना) दक्षिण ( नया) पर्वत के ऊपर चढने केलिये "५२५" सीडियां है, जहा माता अञ्जना देवी ने श्री बाल हनुमान को जन्म दिया उस गुफा के ऊपर ( ठीक उसी जगह मे पर्वत के शिखर कोने पर (अचरत् पर्वतस्याग्रे, वा.रा.कि.सर्ग ६६ श्लो ११, स्थिताया: पर्वतस्याग्रे, श्लो १२,)

**३** पुराने **(** १५*२० फीट् **)** दिव्य मन्दिर है ।
**१)** श्री हनुमान् जी का, **२)** माता अञ्जना देवी का । **३)** भगवान श्री रामचद्र दरबार मन्दिर, इस मन्दिर में माता अञ्जना देवी की गोद में बैठे हुये बाल हनुमान का दिव्य विग्रह भी विराजमान है । यह दोनों मन्दिरों में अभी भी पूजा हो रही हैं । विगत लाखों वर्षों से अनेक श्रद्धालु देश विदेश से इस मन्दिर में आकर भगवान का दर्शन प्राप्त कर रहे हैं । इसके साथ ही किष्किंधा में २०० छोटे मंदिर भी हैं, जो भगवान हनुमान के इतिहास पर प्रकाश डालते हैं

तु तत्रैव सम्भ्रान्ता सुवृत्ता वाक्यमब्रवीत् ।
एकपत्नीव्रतमिदं को नाशयितुमिच्छति ।
अञ्जनाया वचः श्रुत्वा मारुतः प्रत्यभाषत ।। 4.66.16 ।।
स तामिति । तां गतात्मा तद्गतचित्तः । तां पर्यष्वजतेति सम्बन्धः।। 15,16 ।।
न त्वां हिंसामि सुश्रोणि माभूत्ते सुभगे भयम् ।
मनसा ऽस्मि गतो यत्त्वां परिष्वज्य यशस्विनीम् ।। 4.66.17 ।।
नेति । न हिंसामि पातिव्रत्यान्न प्रच्यावयामि ।। 4.66.17 ।।







## श्री किष्किन्धा अञ्जनाद्रि पर्वत प्रवेश द्वार




## श्री किष्किन्धा अञ्जनाद्रि पर्वत मे विराजमान भगवान श्री रामचद्र दरबार मन्दिर, अयोध्या श्री रामपादुका




## श्री बाल हनुमान मन्दिर पर्वत (श्री हनुमान जी का बाल्य लीला स्थान)



